तिरुमलतिरुपतिदेवस्थानम्



# सप्तगिरिः

सचित्रमासपत्रिका

फेब्रवरि - २०११ रू.५/-



श्रीनिवासमङ्गापुरम्

श्रीकल्याणवेङ्कटेश्वरस्वामिनः

वार्षिक ब्रह्मोत्सवः

२४-०२-२०११ तः

०४-०३-२०११ पर्यन्तम्

तिरुमलतिरुपतिदेवस्थानम्

# श्रीनिवासमङ्गापुरम्
# श्रीकल्याणवेङ्कटेश्वरस्वामिनः
# वार्षिक ब्रह्मोत्सवः

२४-०२-२०११ तः
०४-०३-२०११ पर्यन्तम्

२४-०२-२०११ भानुवासरः
प्रातः - ध्वजारोहणम्
रात्रौ - महाशेषवाहनम्

२५-०२-२०११ सोमवासरः
प्रातः - लघुशेषवाहनम्
रात्रौ - हंसवाहनम्

२६-०२-२०११ मङ्गलवासरः
प्रातः - सिंहवाहनम्
रात्रौ - मौक्तिकमण्डपम्

२७-०२-२०११ बुधवासरः
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - सर्वभूपालवाहनम्

२८-०२-२०११ गुरुवासरः
प्रातः -
आन्दोलिकायां मोहिन्यवतारः
रात्रौ - गरुडवाहनम्

०१-०३-२०११ शुक्रवासरः
प्रातः - हनुमद्वाहनम्
सायं - वसन्तोत्सवः
रात्रौ - गजवाहनम्

०२-०३-२०११ शनिवासरः
प्रातः - सूर्यप्रभावाहनम्
रात्रौ - चन्द्रप्रभावाहनम्

०३-०३-२०११ भानुवासरः
प्रातः - रथोत्सवः
रात्रौ - अश्ववाहनम्

०४-०३-२०११ सोमवासरः
प्रातः - चक्रस्नानम्
रात्रौ - ध्वजावरोहणम्

# गीतामृतम्



नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्त स्त्वनयोस्ततदर्शिभिः॥

(भगवद्गीता २/१६)

असद्वस्तुनः सत्ता नास्ति एवं सतः अभावोऽपि नास्ति। एवं रूपेण अनयोः उभयोः तत्वविषये तत्वदर्शिभिः दृष्टः।

# सङ्कीर्तनम्



सकलं हे सखि जानामि तत्
प्रकटविलासं परमं धधसे ॥सकलं॥

अलीकमृगमदमयमषीकलनो
ज्वलतां हे सखि जानामि
ललितं तव पल्लवित मनसि
निश्चलतर मेघश्यामं धधसे ॥सकलं॥

चारुकपोलस्थलकराश्वित
विचारं हे सखि जानामि
नारायणमहिनायकशयनं
श्रीरमणं तव चित्ते धधसे ॥सकलं॥

घनकुचशैलाग्रस्थितविधुमणि
जननं हे सखि जानामि
कनदुरसा वेङ्कटगिरिपते
र्विनुत भोगसुखविभवं धधसे ॥सकलं॥

(श्री अन्नमाचार्यस्य संस्कृतसङ्कीर्तनानि)

अस्यां सङ्कीर्तनायां जयदेवानुसरणं दृश्यते। अत्र जयदेव इवायमप्याचार्यः अन्नमाचार्यः सखीमुखेन नायिकावस्थां वर्णयति।

# आन्तरिकान्धकारनिवारकाः आल्वाराः

भूमिं प्रतिष्ठाप्य तस्य रक्षणार्थं भगवान् श्रीमन्नारायणः स्वभक्तेभ्यः पञ्चविधसेवान् कल्पयति। ते परम-व्यूह-विभव-अन्तर्यामी-अर्च्यरूपाः। परम इत्युच्यमानस्य श्रीवैकुण्ठप्राप्तिः तु सांसारिकमानवानां कृते कष्टसाद्यः एव। व्यूहः क्षीरसागरे शयानस्य भगवतः विष्णोः स्वरूपः। क्षीरसागरः तु बहिश्चक्षु कृते अगोचरः भवति। तस्य दर्शनं केवलं तपस्वीजनाः एव कुर्वन्ति। विभवस्तु अवतारदर्शनम्। भगवान् मत्स्यावतारात् कृष्णावतारपर्यन्तं स्वीकृतावताराः तस्मिन् तस्मिन् युगे जाताः। तेषां दर्शनमपि असम्भवः एव। अन्तर्यामी अनन्तरूपः। अस्यार्थः अन्तर्मनसि निवासः इति भगवद्गीतायां - 'सर्वस्य चाहं हृदि सन्निविष्टो' इति उक्तम्। अस्यानुभवाय कर्म, ज्ञान एवं भक्तियोगे अभ्यासस्य आवश्यकतास्ति। अन्तिमरूपः वर्तते अर्च्यदशा। अर्थात् दृष्ट्वा मनसि ग्रहणार्थं सुगम्यविग्रहरूपं भाव्य मन्दिरे तस्य विग्रहस्य कृते सेवाप्रदर्शनम्।

एनामेवार्च्यामूर्तिम् आल्वाराः स्वीकृत्य, अस्याः विषये लेखाः, अर्चनाः, श्रावणादिकं कुर्वन् जीवनयापनं कृतवन्तः। ते च आल्वाराः भगवदनुग्रहेण स्पष्टज्ञानं प्राप्तवन्तः। अत एव तैः रचिताः प्रबन्धाः दिव्यप्रबन्धाः सञ्जाताः। ते यत्र - यत्र प्रबन्धानां रचनां कृतवन्तः तत्र-तत्र दिव्यक्षेत्राण्यभवन्। तान्येव १०८ दिव्यक्षेत्राणि भगवते श्रीविष्णवे समर्पितानि मुख्यमन्दिराणि। सर्वत्र मङ्गलार्च्यामूर्तयः सञ्जाताः।

आल्वाराः दिव्यप्रबन्धानां माध्यमेन संसाराय 'भगवदर्थम् अन्यत्रान्वेषणस्यावश्यकता नास्ति, भगवान् सर्वत्र व्याप्तः' इति सन्देशं दत्तवन्तः। एतदृशविचारः अस्मान् भगवत्कृपापात्रयोग्यान् करोति। एनमेव विषयं कुलशेखर आल्वारः 'तरु तुयरम् तडायेल्' नामके शीर्षके प्रतिपादितवान्। तत्र यथा मातुः बालकस्योपरि क्रोधं प्रदर्श्यमानेऽपि बालः पुनः मातुः पार्श्वे आयाति; तथैव अहं भगवतः सेवायामागम्यमान संकटानतिक्रम्य तस्य शरणे पुनः गच्छामि। अयमेव आत्मा - परमात्मा मध्ये शुद्धसम्बन्धः।

अस्मिन् मासे आल्वाराणां राज्ञः कुलशेखराल्वारस्य जन्मनक्षत्रदिने, रथसप्तमीदिने च वयं सर्वे स्वीयान्तरिकम् अन्धकारं दूरं कृत्वा सुखजीवनं यापयामः!!

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*


तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०५ सञ्चिका-११

# फेब्रवरि -२०१९

श्रीविलम्बिनामसंवत्सरस्य पौषकृष्णद्वादशी
माघकृष्णनवमी पर्यन्तम् - १९४०




# सप्तगिरिः




**मुखचित्रम् –** श्रीदेवीभूदेवी समेतः श्रीकल्याणवेङ्कटेश्वरस्वामी, (श्रीनिवासमङ्गापुरम्)

**अन्तिमरक्षापुटः –** श्रीकामाक्षीसमेतः श्रीकपिलेश्वरः, कपिलतीर्थम्, (तिरुपतिः)




सूचना

मुद्रितलेखानां विचाराः लेखकानामेव ।
एतद्विषये अस्माकं दायित्वं नास्ति।

*– प्रधानसंपादकः*


## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरि, ति.ति.देवस्थानम्,
तिरुपति - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३४९.
सूचनानाम्, आक्षेपाणां च कृते
संपर्कं कुर्वन्तु -
sapthagiri_helpdesk@tirumala.org


एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-

# आदिदेव नमस्तुभ्यम्! प्रसीद मम भास्कर!!



तेलुगु मूलम् - कु.एस्.लावण्या
संस्कृतानुवादः - श्री हरिकृष्णः

**प्रत्यक्षदेवः श्रीसूर्यः समस्तलोकेभ्यः प्रकाशस्य प्रदाता अस्ति। एषः श्रीकाकुलजिल्ला मध्ये अरसवल्लि मध्ये स्थितः वर्तते। स्थलपुराणे देवानां राज्ञा इन्द्रेण प्रतिष्ठापित इति स्पष्टं भवति।**

(१२-०२-२०१९ रथसप्तमी सन्दर्भे...)
**सप्ताश्वरथमारूढं, प्रचण्डं कश्यपात्मजम्।**
**श्वेतपद्मधरं देवं, तं सूर्यं प्रणमाम्यहम्॥**

सप्ताश्वानां रथे श्री सूर्यनारायणः महाप्रचण्डकान्त्या पद्मपत्रनयनाभ्यां मकरकुण्डले धृत्वा, हस्तभ्यां श्वेतपद्मौ स्वीकृत्य सूर्यकठार्या युक्तो वर्तते। स्वामिनः वामपार्श्वे उषादेवी, दक्षिणे पद्मिनीदेवी, पादयोः पार्श्वे छायादेवी च स्थिताः वर्तन्ते। उभयतः पिङ्गलमार्ताण्डौ, रावम् उपरि भागे सनकसनन्दनादि महर्षिभ्यः साकं गन्धर्वाः-किन्नेर-किंपुरुषाः-अप्सरसाः स्थिताः वर्तन्ते। स्वामिने विश्वकर्मणा निर्मितः स्वर्णरथः वैजयन्तीरथः ३६ लक्षयोजनोद्यः, ९ लक्षयोजनविस्तीर्णः च वर्तते।

अस्मिन् रथे सूर्यस्य परिवारदेवाः ब्रह्मरुद्रादयः, गणपतिः एवं कुमारस्वामिनः साकम् इन्द्रमयी च सन्ति। स्वामिनः सप्ताश्वाः च वर्तन्ते।

सूर्यनारायणस्वामिनः वर्णचित्रं पद्मपुराणरीत्या, ऋग्वेद - काश्यपशिल्पशास्त्रनियमावली, रूपध्यानरत्नावली एवं कलङ्कारी चित्रकलानां सम्मेलनेन चित्रितः।

सूर्यभगवान् वेदानां चिह्नतया विराजते। ऋग्वेदे अन्धकारस्य नाशयिता, ज्ञानदाता, सर्वजीवनाधारः, आरोग्यप्रदाता इति नामभिः सूर्यः स्तुतः।

मानवेभ्य एव न, अपि तु सुरासुरेभ्यः अपि सूर्यः आराध्यमानः। सुप्रसिद्धं गायत्रीमन्त्रमपि सूर्यपरकम् एव। आदित्यहृदयस्य पठनेन एव श्रीरामः रावणस्य वधं कर्तुं समर्थोऽभूत्। पाण्डवाः सूर्यानुग्रहेणैव अक्षयपात्रं प्राप्य अरण्यवाससमये तेभ्यः साकं तत्र विद्यमानेभ्यः अपि आहारसमस्यां निवारितवन्तः। सूर्योपासनया एव सत्राजित् शमन्तकमणिं प्राप्तवान्।

रथसप्तमी मुख्यतया सूर्याराधनायाः पर्वदिनम्। रथसप्तमीं सूर्यजयन्ती इत्यपि वदन्ति। केषुचित् प्रान्तेषु सौरसप्तमी, भास्करसप्तमी, महासप्तमी इत्यपि वदन्ति। सूर्यस्याविर्भावः माघशुक्लसप्तम्यामेवाभवत् इति कारणतः दिनमिदं सूर्यजयन्ती इति नाम्ना आचक्षते। सूर्यः अदिति-कश्यपयोः पुत्रतया अस्मिन्नेव दिने आविर्भूतः।

**द्वादशादित्याः -** सूर्यमेव श्रीसूर्यनारायण इति वदन्ति। अर्थात् सूर्यः नारायणस्वरूपः एव (विष्णुपुराणम्, भगवद्गीता)। श्रीमन्नारायणस्वरूपः सूर्यः एकरूपश्चोदपि कालदेशक्रियाभेदैः द्वादशरूपेषु विराजते। एकैकस्मिन् मासे एकैकेन रूपेण प्रकाशमानः सन् विविधनामभिः स्तूयते। तानि नामानि - चैत्रे धाता, वैशाखे अर्यमः, ज्येष्ठे मित्रः, आषाढे वरुणः, श्रावणे इन्द्रः, भाद्रपदे विवस्वान्, आश्वयुजे त्वष्टा, कार्तिके विष्णुः, मार्गशीर्षे तर्यमः, पुष्ये भगः, माघे पूषा, फाल्गुणे क्रतुः इति विविधनामभिः तत्तन्मासेषु व्यवह्रियते।



मानवेभ्य एव न, अपि तु सुरासुरेभ्यः अपि सूर्यः आराध्यमानः। सुप्रसिद्धं गायत्रीमन्त्रमपि सूर्यपरकम् एव। आदित्यहृदयस्य पठनेन एव श्रीरामः रावणस्य वधं कर्तुं समर्थोऽभूत्। पाण्डवाः सूर्यानुग्रहेणैव अक्षयपात्रं प्राप्य अरण्यवाससमये तेभ्यः साकं तत्र विद्यमानेभ्यः अपि आहारसमस्यां निवारितवन्तः। सूर्योपासनया एव सत्राजित् शमन्तकमणिं प्राप्तवान्। अरुणोदयकाले स्नात्वा सूर्याराधनं महापुण्यफलप्रदमिति, अरोग्यप्रदमिति, अकालमृत्युपरिहारकमिति पुराणानि प्रचक्षन्ते। रथसप्तमी दिने सूर्योदयकाले आकाशे नक्षत्रसमूहः रथाकारे भवति। एवं रीत्या रथाकारे नक्षत्रयुतकारणात् रथसप्तमीति नाम्ना प्रसिद्धिः।

**अर्क- बदरी पत्राणां प्राशस्त्यम् -** रथसप्तमी दिने शिरस्नाने अर्क-बदरी पत्रान् शिरोपरि, भुजयोः, हस्तयोरुपरि च स्थाप्य स्नानं कर्तव्यम्। सूर्यकिरणेषु स्थितं प्राणशक्तिम् अधिकतया स्थापनशक्तिः एषु पत्रेषु विद्यते। सूर्यस्य अर्क इति नाम अपि वर्तते। अर्कपत्रं सर्वरोगनिवारकम् अस्ति। बदरीपत्राण्यपि पूर्वोक्तलक्षणयुतान्येव। पूर्वोक्तरीत्या स्नानकरणेन मानसिकदाढ्र्यता, मेधाशक्तिः च वर्धते। शरीरसम्बन्धी रोगाणि च नश्यन्ति।

**माघमासप्रशस्तिः -** उत्तरायणारम्भः मकरसङ्क्रमणात् प्रारम्भः भवति। तथापि रथसप्तमी तः एव सम्पूर्णतः उत्तरायणं गोचरो भवति। अस्माद्दिनादारभ्य ग्रीष्मः आरभ्यते। तस्माद्दिनादारभ्य उत्तरदिशि प्रकाशते इति कारणात् एनं सूर्यग्रहणवत् भाव्य तर्पणकरणनियमं ज्येष्ठाः निर्णितवन्तः। उत्तरायणं, माघमासञ्च मानवम् उन्नतमार्गे नयन्, भगवत्साक्षात्कारं प्राप्तुं पात्रतां सम्पादयतः।

**आरोग्यप्रदाता आदित्यः -** सूर्योपासनया, सूर्यनमस्काराणां कारणेन, सूर्यस्याभिमुखे भवनात् च शरीराय आरोग्यवर्द्धनं भवति। आत्मशक्तेः वृद्धिरपि भवति। नेत्रशक्तिवृद्धये, हृद्रोगनिवारणाय

**प्रतिवर्षं माघशुक्लसप्तम्यामागम्यमानां सूर्यजयन्तीं/ रथसप्तमीं तिरुमलायां महावैभवेन आचरन्ति। तस्मिन् दिने तिरुमलायां रथसप्तमी नाम्ना उत्सवः आचीयते। दिनेऽस्मिन् श्रीवेङ्कटेशः सूर्योदयादारभ्य सूर्यास्तमयपर्यन्तं सप्तवाहनानामुपरि विहरणं कुर्वन् भक्तेभ्यः दर्शनं यच्छति।**

च सूर्यः एव आराध्यः। सूर्यकान्तिमध्ये स्थितानां नीलकिरणानां प्रभावतः एव अस्मद् शरीरं सहजतया विटमिन् 'डि' उत्पत्तिं करोति। अस्य लोपे सति शरीरस्थ अस्थिवृद्धिः न्यूनीभवति। अत एव प्रातःकाले बहिर्देशे सूर्यस्याभिमुखे स्थित्वा सूर्यनमस्काराणां विधिम् अस्मत् ज्येष्ठाः कल्पितवन्तः।

**लोकपोषकः सूर्यः -** सृष्टिमध्ये स्थिताः जीवराशयः सर्वेऽपि स्व-स्व आहारव्यवहारादीनां कृते प्रत्यक्षेण वा परोक्षेण वा सूर्योपरि एव आधारिताः भवन्ति। सूर्यरश्मिमुपयुज्य वृक्षाः किरणजन्यसंयोगक्रियया आहारस्य उत्पत्तिं कुर्वन्ति। जीवाः सर्वेऽपि स्वीयाहारनिमित्तं वृक्षाणामुपरि एव आधारीभवन्ति। एवं रूपेण प्राणिनः सर्वेऽपि आहारविहारादि निमित्तम् आदित्यस्य आधारेणैव जीवन्ति। एवं सूर्यः लोकपोषकः अभवत्।

सूर्यरथस्यैकमेव चक्रम्। अस्य षट् काष्ठानि, सप्ताश्वाः वर्तन्ते। सूर्यस्य रथसारथिः अनूरः इति। निरन्तरगमनं,



प्रकाशस्य व्यापनादिकं सूर्यस्य गुणाः। इदं भौतिकस्वरूपम्। सूर्यस्य संवत्सरात्मकम् एकं चक्रम्, विश्वमेव रथः, षड्ऋतवः एव काष्ठा, छन्दांसि एव सप्ताश्वाः।

**तिरुमलायां रथसप्तमी -** श्रीतिरुमलेशस्य-सूर्यस्य; रथसप्तम्याः - सप्तमी संख्यायाश्च अविनाभावसम्बन्धः दृग्गोचरो भवति। तिरुमलेशः सप्तगिरिषु स्थित्वा भक्तानां रक्षणं करोति। सूर्यः सप्तश्वानामुपरि पयनं कुर्वन् सप्ताधोलोकान्, सप्तोर्ध्वलोकान् स्व प्रकाशेन व्यापयति। उभावपि तमसः निवरकौ, पापसंहारकौ च। सर्वलोकरक्षणकार्यम् उभाभ्यां समानलक्षणम् अस्ति। तिरुमलेशः वेङ्कटनारायणः, आदित्यः सूर्यनारायणः। तिरुमलेशस्य रथः सुवर्णमयः, सूर्यरथोऽपि हिरण्मयः। एवं रीत्या लक्ष्मीनारायणस्य, सूर्यनारायणस्य च साम्यत्वं दृश्यते।

तिरुमलेशस्य विशेषोत्सवेषु रथसप्तमी एकं विशिष्टं स्थानं भजते। प्रतिवर्षं माघशुक्लसप्तम्यामागम्यमानां सूर्यजयन्तीं/रथसप्तमीं तिरुमलायां महावैभवेन आचरन्ति। तस्मिन् दिने तिरुमलायां रथसप्तमी नाम्ना उत्सवः आचीयते। दिनेऽस्मिन् श्रीवेङ्कटेशः सूर्योदयादारभ्य सूर्यास्तमयपर्यन्तं सप्तवाहनानामुपरि विहरणं कुर्वन् भक्तेभ्यः दर्शनं यच्छति। तानि - १. सूर्यप्रभावाहनम्, २.लघुशेषवाहनम्, ३. गरुडवाहनम्, ४. हनुमद्वाहनम्, ५. कल्पवृक्षवाहनम्, ६. सर्वभूपालवाहनम्, ७. चन्द्रप्रभावाहनम्। मध्याह्ने वराहस्वामिनः आलयस्याग्रे स्थितायां स्वामिपुष्करिण्यां चक्रत्ताल्वार् (सुदर्शनचक्रमूर्तिः) चक्रस्नानं भवति।

एकस्मिन्नेव दिने श्रीस्वामी सप्तवाहनेषु विविधालङ्कारेषु दर्शनं यच्छति। अयमेव रथसप्तम्याः विशेषः। अत एव रथसप्तमी उत्सवः अर्धब्रह्मोत्सवः इति, एकदिनब्रह्मोत्सवः इति भक्तैः सम्बोध्यते।

अतः सर्वेऽपि प्रतिदिनं सूर्यनारायणस्य आराधनं कुर्मः। विशेषतया रथसप्तमी दिने आदित्याराधनं कृत्वा आयुरारोग्यैश्वर्यान् प्राप्नुमः।





# कपिलेश्वर! स्वयम्भूलिङ्गेश्वर!!

- तेलुगुमूलम् - श्रीमती ईतकोटि मुनेम्मा मुत्तुकृष्णन्
संस्कृतानुवादः - श्री अङ्कुरवत्सः

(२५-०२-२०१९ तः ०६-०३-२०१९ पर्यन्तं श्रीकपिलेश्वरस्वामिनः ब्रह्मोत्सवसन्दर्भे...)

कपिलमहामुनि पूजितलिङ्गं, सकलसुरासुरवन्दितलिङ्गम्।
भुविजनरक्षणकारणलिङ्गं, समतमहाकपिलेश्वरलिङ्गम्।।

**स्थलपुराणम् - कपिलेश्वरमहालिङ्गाविर्भावः -**

पाताललोके 'भोगवती' इति नाम्नायाः गङ्गानद्याः तीरे स्थितस्य स्वाश्रमे कपिलमहर्षिः एकं शिवलिङ्गं पूजयन् वर्तते। तच्च लिङ्गं तेजोभिः आपूर्यमाणं, प्रकाशमानं च वर्तते। एवमेव प्रकाशस्य व्यापनेन सह तत् लिङ्गं दिनदिनाभिवृद्धिं प्रापन् ऊर्ध्वमुखे भूमिं विच्छेद्य अन्तिमे वेङ्कटाचलक्षेत्रे स्वयम्भू रूपेण आविर्भूतम्। एवं वर्धनशीलं लिङ्गं दृष्ट्वा तस्य वर्धनस्य स्थगनार्थं सङ्कल्प्य श्रीमहाविष्णुः गोपालरूपेण, ब्रह्मदेवः कपिलधेनुरूपेण परिणतौ। शिवलिङ्गोपरि अनन्तक्षीरधारान् वर्ष्यमाणौ, उभावपि अभिषेकं कुर्वन्तौ अनेकप्रार्थनान् कृतवन्तौ। तेन पाताललोकात् वर्धनरतं लिङ्गं वेङ्कटाद्रिपर्वतमूले स्थितायां गुहायां स्वयम्भू रूपेण आविर्भूतम्। पाताललोकादागतेन लिङ्गेन साकं पार्श्वे स्थिता 'भोगवती' गङ्गा अपि आगता। एवं रूपेण आविर्भूतस्य लिङ्गस्य तत्रैव उद्भूतायाः भोगवत्याः तीर्थजलैः सर्वेदेवाः अभिषेकादिकं कृत्वा पूजाः कृतवन्तः।

> अस्य शिवलिङ्गस्य पाताले कपिलमहर्षिः पूजितवानिति कारणात् शिवस्य 'कपिलेश्वर' इति नाम आगतम्। तस्य सन्निधौ उद्भूता 'भोगवती' गङ्गाऽपि 'कपिलतीर्थम्' इति नाम्ना प्रसिद्धिमप्राप्नोत्। अस्मिन् कपिलतीर्थे उद्भूतः श्रीकामाक्षीसमेतः श्रीकपिलेश्वरस्वामी भक्तानां मनोवाञ्छाः पूरयन् सर्वेषां पापान् निवारयति, सकलसौभाग्यान् प्रसादयति च।

**कपिलतीर्थचारित्र्यम् -** वैष्णवमताभिमानी अच्युतरायः श्रीवेङ्कटेशस्वामिने प्रीतिकरं 'कपिलतीर्थम्' इति नाम विस्मारयन् 'सुदर्शनचक्रतीर्थम्' इति नाम्ना प्रसिद्धिमकारयत्। एवमेव २५-०६-१५३१ दिनाङ्के पुष्करिण्याः चतुर्षु कोणेषु सुदर्शनचक्रशिलायन्त्रान् प्रतिष्ठाप्य अस्य तीर्थस्य 'चक्रत्ताल्वार् तीर्थम्' इति, 'आल्वार् तीर्थम्' इति नामनी कल्पितवान्।

**अभिषेकाः-अर्चनाः-उत्सवाः -** स्वामिने प्रतिदिनं द्विवारम् अभिषेकः आचर्यते। प्रतिमासे मासशिवरात्रिदिने प्रातः श्रीकपिलेश्वरमहालिङ्गस्य महान्यासपूर्वकः एकादशरुद्राभिषेकः क्रियते। आर्द्रानक्षत्रयुते दिने श्रीकपिलेश्वराय लक्षबिल्वार्चना, कृत्तिकादिने कृत्तिकादीपोत्सवः च भवतः। प्रतिदिनम् अभिषेकसमये अन्ते 'भस्मेन' अभिषेकः, नीराजनादिकं भवन्ति।

प्रति सोमवासरे सायं श्रीकामाक्षीदेवी समेतस्य श्रीकपिलेश्वरस्वामिनः डोलोत्सवः आचर्यते। अस्यैव 'ऊञ्जल्सेवा' इति नाम वर्तते। प्रतिमासे मासशिवरात्रिदिने प्रदोष (सायं सन्ध्या) समये कल्याणोत्सवः क्रियते। प्रतिवर्षम् आषाढमासे पूर्णिमायाः प्राक् स्थितायां चतुर्दश्यां समापनरीत्या दिनत्रयं यावत् पवित्रोत्सवः भवति। आश्वयुजमासे शुक्लप्रतिपदा तः दशमी पर्यन्तं देवीनवरात्रिपूजाः वैभवेन निर्वह्यन्ते। सौरमानानुसारं तुलामासस्थ पौर्णिमायाम् अर्थात् आश्वयुजमासे प्रतिवर्षम् 'अन्नाभिषेकः' इत्युच्यमानः विशेषाभिषेकोत्सवः भवति। दिनमिदं 'कपिलतीर्थोत्सवः' इति विशेषतया आचरन्ति।

प्रतिवर्षम् कार्तिकमासे आर्द्रानक्षत्रयुते दिने लक्षबिल्वार्चना क्रियते। कार्तिकमासे कृत्तिकानक्षत्रयुते दिने प्रदोषसमये कृत्तिकादीपोत्सवः वैभवेन आचर्यते। एवमेव प्रतिवर्षं धनुर्मासे आर्द्रानक्षत्रात् प्राक् दिने समापनरीत्या पञ्चदिनानि पुष्करिण्यां प्रदोषवेलायां प्लवोत्सवः भवति। सौरमानानुसारं प्रतिवर्षं मकरमासस्य पौर्णिमायाः प्राक् आगम्यमाने शुक्रवासरे अथवा चान्द्रमानानुसारं 'पुष्य' अथवा 'माघ' मासे (तमिल-तैनेल) श्रीकामाक्षी मातुः चन्दनालङ्करण-सेवा क्रियते। प्रतिवर्षं माघमासे महाशिवरात्रिपर्वदिनसन्दर्भे दशदिनानि यावत् शैवागमरीत्या ब्रह्मोत्सवः आचर्यते।

**कैलाशशिखरावास, परब्रह्मस्वरूपिणे।**
**कामाक्षि वल्लभायास्तु, कपिलेशाय मङ्गलम्।।**



# वसन्तपञ्चमी

वसन्तपञ्चमी भारतस्य कश्चित् मुख्यः उत्सवः वर्तते। अयमुत्सवः माघमासस्य शुक्लपक्षस्य पञ्चम्यां तिथौ आचर्यते। दिनेऽस्मिन् सरस्वतीदेव्याः विशेषपूजा भवति। सरस्वती माता अस्मभ्यः ज्ञानदात्री वर्तते।



तस्याः पूजनं तु सदा करणीयम्। आदिशक्त्याः रूपत्रयेषु महासरस्वत्याः रूपमपि वर्तते। अस्माकं ऋषिभिः वेदपुराणादीनां साहाय्येन अस्याः देव्याः पूजायाः विशिष्टं दिनं निर्धारितम्।

भगवती सरस्वती सत्वगुणी अस्ति। एषा वाग्देवी, ज्ञानदेवी, शारदा, गिरा, वाचा, गौ, ब्राह्मी इत्यादि नामभिः सम्पूजिता वर्तते। सरस्वतीदेव्याः कृपयैव जनाः ज्ञानिनः, विद्वांसः, मेधाविनः भवन्ति। वसन्तपञ्चम्यां विधिपूर्वकं महासरस्वत्याः पूजा करणीया। शिशूनाम् अक्षरज्ञानस्य आरम्भः अस्मिन् दिने एव करणीयः। विद्यारम्भाय इदं दिनं बहुपवित्रं मन्यते। वयमपि वसन्तपञ्चमी दिने देवीं सरस्वतीं सम्पूज्य सद्बुद्धिं प्राप्नुमः।

''शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीम्,
वीणा-पुस्तकधारिणीमभयदां जाड्यान्धकारापहाम्।
हस्ते स्फाटिकमालिकां विदधतीं पद्मासने संस्थिताम्,
वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम्।।''

तिरुमलतिरुपतिदेवस्थानम्

# देवुनिकडपा
# श्रीलक्ष्मीवेङ्कटेश्वरस्वामिनः
# वार्षिक ब्रह्मोत्सवः

**०५-०२-२०११**
**तः**
**१४-०२-२०११ पर्यन्तम्**

**०५-०२-२०११**
**मङ्गलवासरः**
प्रातः - ध्वजारोहणम्
रात्रौ - चन्द्रप्रभावाहनम्

**०६-०२-२०११**
**बुधवासरः**
प्रातः - सूर्यप्रभावाहनम्
रात्रौ - महाशेषवाहनम्

**०७-०२-२०११**
**गुरुवासरः**
प्रातः - लघुशेषवाहनम्
रात्रौ - सिंहवाहनम्

**०८-०२-२०११**
**शुक्रवासरः**
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - हनुमद्वाहनम्

**०९-०२-२०११**
**शनिवासरः**
प्रातः - मौक्तिकमण्डपम्
रात्रौ - गरुडवाहनम्

**१०-०२-२०११**
**भानुवासरः**
प्रातः - कल्याणोत्सवः
रात्रौ - गजवाहनम्

**११-०२-२०११**
**सोमवासरः**
प्रातः - रथोत्सवः
रात्रौ - धूलि उत्सवः

**१२-०२-२०११**
**मङ्गलवासरः**
प्रातः - सर्वभूपालवाहनम्
रात्रौ - अश्ववाहनम्

**१३-०२-२०११**
**बुधवासरः**
प्रातः - वसन्तोत्सवः, चक्रस्नानम्
रात्रौ - ध्वजावरोहणम्, हंसवाहनम्

**१४-०२-२०११**
**गुरुवासरः**
रात्रौ - पुष्पयागः



# श्रीपद्मावतीमातुः



शेषवाहनोपरि भ्रममाणा श्रीपद्मावती!



मौक्तिकमण्डपे मौक्तिकारति प्रकाशे
श्री अलमेलुमङ्गा!



भद्रगजोपरि मङ्गलनीराजनान् स्वीकुर्वती
'गजलक्ष्मीः' श्रीअलमेलुमङ्गा!



आनन्दामृत प्रदात्री
आनन्दमयी श्रीअलमेलुमङ्गा!



श्रीपद्मावती उत्सवे उभयतेलुगु राज्य गवर्नर्
मान्यश्री इ.एस्.एल्.नरसिंहन् दम्पती: भागं गृहीतवन्तौ।



जन्मदिनोपायनम्
श्रीवेङ्कटेशेन प्रेषितं स्वर्णहारम्।

# कार्तिकब्रह्मोत्सवः



कल्पवृक्षछायायां वरप्रदायिन्यै
'वरलक्ष्म्यै' दिव्यारार्तिक्यम्!



तिरुचानूरु ब्रह्मोत्सवे
श्रीजिय्यङ्गाराणां पाशुरप्रबन्धगोष्ठिः!



सूर्यप्रभायां प्रकाशमाना
वेङ्कटेशस्य पत्नी श्रीपद्मावती!



ब्रह्माण्डनायक्याः ब्रह्मोत्सवे
भक्तजनसन्दोहः!



महालक्ष्म्यै सप्तगिरीशेन प्रेषित उपायनैः साकं
ति.ति.दे. अर्चकाः, अधिकारगणश्च!



'पञ्चमीतीर्थ' दिने पद्मासरसि
मज्जमानः श्रीसुदर्शनभगवान्!

# नारदः

- श्री एम्. कामेश्वररावः

**नारदशब्दस्य अर्थः नारं ददातीति नारदः इति। अर्थात् ज्ञानं ददाति इति। चतुर्मुखब्रह्मणः ग्रीवात् नारदः जन्म लेभे इति भागवतपुराणवचनम्। नारदस्तु महातपस्वी, कविपुङ्गवः। महान् सङ्गीतकारः च वर्तते। एषः साधु-असाधु इत्येतयोः मध्ये वारिधिरिव कार्यरतः अस्ति। सात्विकानां कृते मार्गोऽपदेशकः सन् मोक्षप्रदाता अभवत्। सर्वदा त्रिषु लोकेषु सञ्चरन् भक्तेः प्रचारं कुर्वन् अटति स्म।**



यदा असौ शिशुः (नारदः) ब्रह्मणः कण्ठात् बहिः आगतः, तदानीं ब्रह्मा तपसि निमग्नः आसीत्। पार्श्वे मातासरस्वती तु प्रसन्नवदना स्थिता आसीत्। झटिति सा शारदा स्व पुत्राय गानविद्याम् उपदिष्टवती। नारदः तु रागाणां सृष्टिं कृतवान्। वायुदेवः ''महती'' नाम्नीं वीणां बहूकृतवान्। पिता ब्रह्मदेवः अष्टाक्षरीमन्त्रोपदेशं कृत्वा - 'त्वं लोककल्यणार्थं सदा, सर्वथा लोकसञ्चारं करिष्यसि' इति आशीः दत्तवान्। एवं प्रकारेण नारदः लोकसञ्चारी, ज्ञानप्रदाता च अभूत्।

नारदस्तु महातपस्वी, कविपुङ्गवः। महान् सङ्गीतकारः च वर्तते एषः साधु-असाधु इत्येतयोः मध्ये वारिधिरिव कार्यरतः अस्ति। सात्विकानां कृते मार्गोऽपदेशकः सन् मोक्षप्रदाता अभवत्। सर्वदा त्रिषु लोकेषु सञ्चरन् भक्तेः प्रचारं कुर्वन् अटति स्म। महाभारते युधिष्ठिराय धर्मबोधं, मार्गदर्शनं च नारदः एव कृतवान्। तच्चेत्थम् -

'धर्मराज! सैन्यम्, आयुधानि सदा सज्जीकुरु! सेवकानामुपरि दयां प्रदर्शय! भवतां सेवकानां, सैनिकानां च प्रतिमासं मासस्य वेतनं ददातु! धनस्य जागरूकतया व्ययं कुरु! कृषकाणां कृते सुव्यवस्थान् कल्पयतु' इति सूचनाः नारदः दत्तवान्। पुराणेषु, यक्षगानेषु, कथासु नारदस्य अस्तित्वम्, उपस्थितिः सदा भवत्येव। वीणायुक्तः नारदः सुप्रसिद्धः। सर्वास्ववस्थासु ''नारायण'' मन्त्रं जपन् एव नारदः वरीवर्ति। कृत-त्रेता-द्वापरयुग सम्बन्धी कथासु सर्वत्र नारदस्य प्रस्तावना दरीदृश्यते।

यत्र-यत्र अधर्मः भवति, तत्र तत्र गत्वा स्व वयोभिः मार्गदर्शनं कुर्वन्, कुत्रचित् उभयोः पक्षयोः मध्ये कलहं सृजन् अन्ते लोककल्याणं कारयित्वा सर्वैः स्तूयमानः सन् अस्माकं मार्गदशकरूपेण नारदमहर्षिः वर्तते। अधर्मोपरि धर्मस्य विजयः एव नारदस्य अन्तिमलक्ष्यमिति वक्तुं शक्यते।

स्वपितुः ब्रह्मणः सकाशात् भविष्यत्कालसंघठनाः ज्ञात्वा व्यासमहर्षये उक्तवान्। तदनुसारं व्यासः कल्किपुराणं लिखितवान्। एवमेव अगस्त्यमुनिना वामनपुराणं ज्ञात्वा व्यासं लेखितुं प्रेरेपितवान्। महाभारतरचनायां नारदः एव मुख्यसूत्रधारः इति वक्तुं शक्यते।

नारदभक्तिसूक्तिष्वपि नवविधानां भक्तानां वर्णनाः उपलभ्यन्ते। शिल्पशास्त्रग्रन्थेषु गृहनिर्माण-वास्तुशास्त्रलक्षणानां वर्णनानि नारदेन एव कृतानि। एवं पश्यामश्चेत् असौ महान् पण्डितश्च वर्तते। नारदस्य विवाहविषयेऽपि तत्र अनेकाः गाथाः प्रचारे आसन्। त्रिलोकसञ्चार रूपीं शापं वरवत् स्वीकृत्य नारायण नामस्य सङ्कीर्तनां लोके व्यापितवान्।

उत्तानपादसुताय ध्रुवाय 'ॐ नमो भगवते वासुदेवाय' इति नारायणमन्त्रम् उपदिष्टवान्। एवमेव प्रह्लादाय अपि नारायण सन्निधि प्रापणे अस्य महत्वं दरीदृश्यते।

एवं रीत्या नारदः सर्वेषां मानवानां, ऋषीणां, देवानां च कृते कल्याणकारकः वर्तते।



# कुमारधारा प्राशस्त्यम्

- श्री धनेश्वरः साहू



**तिरुमलायां त्रिकोटि तीर्थानि सन्तीति प्रसिद्धिः। तत्र कानिचन सुप्रसिद्धानि वर्तन्ते इति पुराणानामाधारेण ज्ञायते। सर्वेषु तीर्थेषु मुख्यप्रमुखतीर्थानि चतुर्धा विभज्यन्ते। तानि धर्मरति-ज्ञानप्रद-भक्तिवैराग्य-मुक्तिप्रदतीर्थानि।**

तत्र मुक्तिप्रदतीर्थेषु कुमारधारातीर्थम् आयाति। तीर्थमिदम् अधुनाऽपि तिरुमलायां प्रवहति। तिरुमलतिरुपतिदेवस्थानेन अत्र एकं लघुजलाशयं निर्मितम्।

**वराहपुराणम् -** वराहपुराणम् कुमारधारातीर्थमाहात्म्यमेवम् अभिवर्ण्यते - श्रीनिवासः वेङ्कटाचलस्योपरि भ्रमणसमये एकः वृद्धब्राह्मणः 'कौण्डिन्य! मां त्यक्त्वा कुत्र गतवान्? अहं तु शतवृद्धः! एकाकी कथं सञ्चरेयम्?' इति विलपनं कुर्वन् आसीत्।

नवयौवनः श्रीनिवासः तस्य समीपे गत्वा-अत्र कौण्डिन्यः कोऽपि नास्ति। भवान् किम् इच्छति? इति पृष्टवान्। तदा वृद्धः - भोः! मम आश्रमः दूरे वर्तते। मम पुत्रः कौण्डिन्यः नास्ति चेत् को मां तत्र नयति? मम धर्मपालनम् आचरितुम् अहम् अशक्तः, इतोऽपि भगवान् मम रक्षां किमर्थं करोतीति विचारं प्रकटी कृतवान्। श्रीनिवासः तस्य वचनानि श्रुत्वा - भवतः जीवने को इच्छा? इति उक्तवान्। तदा सः - अहम् एकप्रयोजनस्य कृते एव जीवितुमिच्छामि 'ज्योतिष्टोमादीन् अचार्य देवऋ णात् मुक्तः भवितुमिच्छा वर्तते' इति प्रोक्तवान्।

वेङ्कटविभुः तस्य वचनैः तुष्टः सन् किञ्चित् दूरं हस्तेन तं नीत्वा एकस्मिन् तीर्थे स्नानं कारितवान्। तदा सः वृद्धः कुमारोऽभूत्। अतः अस्य तीर्थस्य **कुमारधारातीर्थमिति** नाम जातम्।

पद्मपुराणे पृथक्कथा एका दृश्यते। पुरा देवानां प्रार्थनाः श्रुत्वा कुमारस्वामी असुरान् जहान। तदा शङ्करः तं सैन्याध्यक्षरूपेण नियमितवान्। कुमारस्वामिनः तस्मिन् कर्मणि आकाङ्क्षा नासीत्। सः श्रीमन्नारायणाज्ञया वेङ्कटाचलोपरि एकस्मिन् प्रदेशे नानाविधपुष्पैः स्वामिनम् आराधयन् तपश्चकार। तस्य तपसा सन्तुष्टः श्रीनिवासः दर्शनं दत्वा 'शक्ति' नाम्नीम् आयुधं दत्वा अन्तर्धानोऽभूत्। कुमारस्वामी कैलाशं प्राप्तवान्।

तपस्सिद्धि प्रान्ते तीर्थं प्रवहतीति कारणात् अस्य प्रदेशस्य 'कुमारधारातीर्थ'मिति नाम जातम्। मार्कण्डेयपुराणे, वामनपुराणेऽपि अस्य तीर्थस्य वर्णनम् उपलभ्यते। अतः



तिरुमलायां कुमारधारातीर्थे स्नानं कृत्वा श्रीनिवाससाक्षात्कारं, समस्ततीर्थयात्राफलञ्च प्राप्नुमः।

# वराहावतारः

तेलुगु मूलम् - डा॥ वैष्णवाङ्घ्रि सेवकदासः
संस्कृतानुवादः - डा॥ कस्तूरि वि.वि.यस्.ए.आर्.चन्द्रशेखरः



भगवदवताराः बहुरमणीयतया सुन्दरतया भवन्ति। ते अतीवमहिमान्वितः सन् बहुदिव्यकार्याणि कुर्वन्ति। परन्तु भगवदवताराः रहस्यप्रायाः। ते कष्टतरसाध्याः। अत एव श्रीमद्भागवते अवताराणां विषये ''जन्मगुह्यं भगवतः'' इति वर्णितम्।

भगवान् अवतारं स्वीकृत्य कार्यद्वयं करोति। सज्जनत्राणः, दुष्टसंहारश्च।

भगवदवताराः महत्तरप्रयोजकाः भवन्ति। अत एव तेषां स्मरणमात्रेणेव कष्टाः शाम्यन्ति। भगवदवतारेषु दशावताराः मुख्याः। ते यथा -

मत्स्यः कूर्मो वराहस्य नारसिंहस्य वामनः।
रामो रामश्च कृष्णश्च बुद्धः कल्किश्च ते दश॥
(पद्म.पु. उत्तरे २५७/४०-४१)

चक्षुषा मनसा वाचा कर्मणेति चतुर्विधम्।
प्रसादयति यो लोकं तं लोकोऽनुप्रसीदति॥

लोके ये मानवाः दिव्यमिवभगवदवताराणां, लीलानां, तेषां कार्याणां त्रिसन्ध्यासु कीर्तयन्ति ते अवश्यं सर्वदुःखरहिताः भवन्ति। भगवान् लोकोद्धरणार्थमेव तेषां लीलानां प्रदर्शनञ्चकार। भक्ताः तेषां लीलाः स्मृत्वा समस्ततापेभ्यः तरितुं समर्थो भवन्ति।

यदा यदा पृथिवीतले धर्मस्य ग्लानिर्भवति, अधर्मस्य प्रादुर्भावः वर्धते, जनाः पापकर्मणि लिप्ताः भवन्ति। साधूनां हिंसा क्रियते। मानवेषु भक्तिः विनश्यति। पारस्परिककलहः पङ्कायते, तदा भगवान् अवतरीति ब्रह्मपुराणे, श्रीमद्भगवद्गीतायां प्रोच्यते। यथोक्तं गीतायां -

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम्॥
परित्राणायसाधूनां, विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे।
(गीता ४/३-४)

तेषु अवतारेषु वराहावतारः अन्यतमः। सृष्टेः आरम्भे विश्वेस्मिन् केवलं जलमेवासीत्। अतः वराहरूपेण अवतारं धृत्वा श्रीमहाविष्णुः रसातलात् भूमेः उद्धरणं कृतवान्। एवं भगवतः अवताराः अनन्ताः इति आगमेषु प्रकीर्तिताः। एवं श्रीमद्भागवतेऽपि अयं वराहमूर्तिं 'यज्ञेशः'; यज्ञवराहः इति वर्णितः।

श्रीमद्भागवतेऽपि इयं कथा तथैव स्वीकृताऽति। यथा-

यत्रोद्यतः क्षितितलोद्धरणाय बिभ्रत्।
क्रौडी तनुं सकलयज्ञमयीमनन्तः।
आन्तर्महार्णव उपागतमादिदैव्यं
तं द्रंष्ट्रयाऽद्रिमिव वज्रधरो दधार॥ (भाग. २/७)

अतः यज्ञवराहमूर्तेः लीलानां वृद्धाप्ये यः श्रोतुमिच्छन्ति सः नारयणस्य दिव्यधामं गच्छति। ये भक्ताः अन्तिमेकाले श्रद्धया भगवल्लीलाः श्रुण्वन्ति, तेषां धनं, यशः, दीर्घायुः, समस्तभीष्टाः सिद्ध्यन्ति।





# श्रीतुलसीदासः

- डा. स्वर्ण साम्बशिवरावः

उत्तरप्रदेशराज्ये 'राजपूर्' ग्रामे
आत्मारां दूबे, हुलसीबायी इति दम्पती स्तः।
तयोः बहुकालात् पर्यन्तं सन्तानं नास्ति। तदा तौ
आञ्जनेयस्वामिनं प्रार्थयामास। तदा हनुमदनुग्रहेण सा
हुलसीबायी गर्भवती बभूव।द्वादशमासानन्तरं सा एकं बालकं
प्रसूतवती। स बालकः एव तुलसीदासः।

क्री.श. १४९७ वत्सरे श्रावणशुद्धसप्तम्यां जनितः। स बालकः जन्मसमये न रोदितः, किन्तु राम! राम! इति रावं कृतवान्। तस्य ''तुलाराम्'' इति नामकरणं कृतवन्तः।

अचिरकाले तस्य बालकस्य माता मृतवती। पिता अपि ग्रामं त्यक्त्वा गतवान्। तदा तुलारामं तस्य पितामही पालितवती। सा अपि अचिरकाले मृतवती। तुलाराम् अनाथबालकः इव राजूपूर्

एकदा श्रीअनन्तानन्दस्वामी रामकथां गायन्तं तं तुलारामं दृष्ट्वा तम् अयोध्यानगरं नीत्वा तस्य बालकस्य ''रांबोलः'' इति नामकरणं कृतवान्।

नगरवीथिषु रामकथां गानं कुर्वन् नगरवीथिषु भिक्षाटनं कुर्वन् कालं यापयति स्म।

तस्मिन् समये पार्वतीमाता अपरवाल्मीकं तं बालकं दृष्ट्वा, तस्य माता इव भूमौ आगत्य, दिने दिने बालकस्य भोजनं दत्वा रात्रौ निद्रां गामयति स्म।

एकदा श्रीअनन्तानन्दस्वामी रामकथां गायन्तं तं तुलारामं दृष्ट्वा तम् अयोध्यानगरं नीत्वा तस्य बालकस्य ''रांबोलः'' इति नामकरणं कृतवान्। उपनयनं कृत्वा बालकः झटिति एव गायत्री मन्त्रम् उच्छारितवान्। तं दृष्ट्वा पण्डिताः सर्वे विस्मिताः बभूवुः। तदा गुरु अनन्तानन्दस्वामी वैष्णवसंप्रदायानुसारेण बालकस्य पञ्चसंस्कारान् कारयित्वा श्रीराममन्त्रदीक्षां दत्तवान्।

गुरुशिष्यौ रामकथां गायन्तौ सकलपुण्यक्षेत्रान् दर्शितवन्तौ। तौ काशीनगरम् आगतवन्तौ। तत्र **श्री शेषसनातन स्वामी** रांबोलं दृष्ट्वा तं स्वीकृत्य वेद, वेदाङ्गान्, अष्टादश पुराणान्, इतिहासान्, समस्तशास्त्रान् १५ वर्षान् बोधितवान्। काशीनगर्यां रांबोलस्य अनेकप्रवचनान् श्रुत्वा पण्डिताः तं बहुधा कीर्तितवन्तः।

गुरुः श्रीशेषसनातनस्वामी एकस्मिन् दिने शिष्यं रांबोलं एवमवदत् - ''हे कुमार! तव विद्या सम्पूर्णा जाता। त्वं स्वग्रामे गत्वा, विवाहं कृत्वा, गृहस्थाश्रमं स्वीकृत्य सुखेन जीवतु'' इति।

गुरोः आज्ञया रांबोलः स्वग्रामं गत्वा, तत्र तस्य मातृपितृभ्यां तर्पणं दत्वा, तस्य पूर्वगृहे एव अवसन्। तस्य पाण्डित्येन, रामकथा प्रवचनैः च रांबोलस्य कीर्तिः व्याप्ता।

तत्र रत्नावलीं नाम्नीं सौन्दर्यकन्यां परिणयित्वा, तया सह अनुरागेण जीवनं करोति। तदा श्रीरामध्यानादपि रत्नावली व्यामोहः अधिकः अभूत्। श्रीरामपूजायामपि निर्लक्ष्यभावः प्राप्तः।

**गुरोः आज्ञया रांबोलः स्वग्रामं गत्वा, तत्र तस्य मातृपितृभ्यां तर्पणं दत्वा, तस्य पूर्वगृहे एव अवसन्। तस्य पाण्डित्येन, रामकथा प्रवचनैः च रांबोलस्य कीर्तिः व्याप्ता।**

एकस्मिन् दिने रत्नावल्याः प्रेरणया रांबोलः रामायणप्रवचनाय ग्रामान्तरं गतवान्। तस्मिन् दिने रत्नावल्याः भ्राता आगत्य तां नद्याः अन्यस्मिन् पारे स्थितं जन्मगृहं प्रति नीतवान्।

रांबोलः प्रवचनानन्तरे ग्रामान्तरात् स्वगृहमागतवान्। तत्र रत्नावली स्वस्यां ग्रामं गतवती इति ज्ञात्वा सः अपि तत्र गन्तुं प्रस्थितः। तदा मेघगर्जनैः उद्धृतवातवेगेन निरवधिका वर्षा प्रारब्धा। रांबोलः नदीतीरमागत्य परस्तात् तीरं नेतुं तत्र उडुपचालकम् अपृच्छत्। सः नद्याः प्रवाहं प्राणकण्टकमिति मत्वा नाहं नेतुमिच्छामि इति अवदत्। तदा रांबोलः नद्याम् उत्पतितः बाहुभ्यां जले तरणेन परस्तात् तीरं गत्वा, रत्नावलीगृहं गतवान्। तत्र कवाटं ताडितवान्। तदा रत्नावली बहिरागत्य अन्धकारतिमिरे सिक्तवस्त्रैः स्थितं स्व पतिं दृष्ट्वा विस्मिता बभूव। रांबोलस्य भार्यानुरागेण प्रथमतः आनन्दं प्राप्तवती। अनन्तरं हे नाथ! तव मयि अनुरागात् रामे भक्तिः स्यात् तर्हि अहं बहुधा त्वम् अश्लाघयम् इति सा कर्कशेन उक्तवती। रत्नावल्याः वचनैः रांबोलः भार्यायां विरक्तिभावेन तत् क्षणात् भार्यां सम्पूर्णेन मनसि अपनीतः। तस्य जीवने केवलं श्रीरामः एव अवर्तत। अन्यविषयाणाम् प्रसक्तिः नास्ति। रांबोलः सन्यासं स्वीकृतवान्। तस्मात् तस्य नाम ''तुलसीदासः'' इति परिवर्तनं जातम्।



तुलसीदासः काशीनगरं प्राप्तवान्। एकदा यथा प्रकारेण सन्ध्यावन्दनं समाप्तिं कृत्वा कलशस्थ जलम् एकस्मिन् वृक्षभूमौ क्षेपितः। तदा तत्र एकः ब्रह्मराक्षसः प्रत्यक्षः तम् अवदत् - हे स्वामिन्! तवानुग्रहेण अहं शापात् विमुक्तः। पृच्छतु भवदर्थम् अहं किं करोमि? इति।

तदा तुलसीदासः श्रीआञ्जनेयस्वामिदर्शनार्थं सहायं करोतु इति उक्तवान्। सः राक्षसः अवदत् - स्वामिन् तव रामायणप्रवचनं श्रोतुं प्रतिदिनम् एकः वृद्धब्राह्मणः आगच्छति। स एव आन्जनेयः इत्युक्त्वा स राक्षसः अन्तर्धानं गतः। तुलसीदासः सायं समये मन्दिरे श्रीरामकथाप्रवचनं समाप्तिं कृत्वा तत्र स्थितस्य वृद्धस्य समीपमागत्य पादाभिवन्दनं कृत्वा एवमपृच्छत् - 'स्वामिन्! कस्त्वं प्रतिदिने प्रथमतः आगत्य प्रवचनं श्रुणोति?' स वृद्धः मौनेन गच्छति। तदा तुलसीदासः तं वृद्धं गृहीत्वा प्रार्थितवान्। तदा आञ्जनेयः प्रत्यक्षः। तुलसीदासः तं प्रार्थयित्वा श्रीरामस्य दर्शनभाग्यं कल्पयतु इति अर्थितवान्। तदा आञ्जनेयस्वामी एवम् उक्तवान् - 'भक्त! त्वं चित्रकूटं गच्छतु तत्र तव श्रीरामस्य दर्शनं भविष्यति' इत्युक्त्वा अन्तर्धानः अभूत्।

तुलसीदासः चित्रकूटं गत्वा तत्र श्रीरामचन्द्रस्य दर्शनं कृतवान्। ततः तुलसीदासः काशीनगरं प्राप्तवान्। तत्र तुलसीदासः रामायणरचना संस्कृतभाषायां लिखितुमारब्धः। किन्तु दिनसमये लिखिताः रचनाः रात्रौ अदृश्याः सम्बभूवुः। तस्मत् दिनादारभ्य अष्टमदिने रात्रौ स्वप्ने पार्वतीपरमेश्वरौ प्रत्यक्षौ - 'वत्स! तुलसीदास! त्वं

**तुलसीदासस्य, काव्यस्य च कीर्तिः उत्तरभारतदेशे सर्वत्र व्याप्तिः। आग्रायां पादुषाचक्रवर्तिः अपि तुलसीदासभक्तम् अतीव श्लाघितवान्।**

संस्कृतभाषायां रामायणं मा लिखतु! प्रजानाम् व्यवहारिकभाषायां ''अवधि'' भाषायाम् एव लिखतु! ततः पामराणां हितं भवति। कुमार! त्वं श्रीरामजन्मभूमिम् अयोध्यां गत्वा तत्र अवधिभाषायां श्रीरामायणं रचयतु! तत् काव्यम् मम आशीर्वादफलेन सामवेदेन तुल्यो भूत्वा सर्वैः पौरैः गीयमाना भवति' इत्युक्तवन्तौ।

तयोः अज्ञानुसारेण तुलसीदासः अयोध्याम् आगतवान्। अयोध्यानगरे क्री.श.१५७४ वर्षे श्रीरामनवमी दिने तुलसीदासः ''श्रीरामचरितमानसम्'' इति काव्यस्य रचनां प्रारब्धवान् । क्री.श. १५७६ तमे वर्षे मार्गशीर्षशुक्लपञ्चम्यां सीतारामविवाहमहोत्सवदिने श्रीरामचरितमानसस्य सप्तकाण्डाः सम्पूर्णाः जाताः।

ततः तुलसीदासः काशीनगरं गत्वा, तत्र काव्यं विश्वनाथाय अश्राव्यत्। तं काव्यं विश्वनाथस्य मन्दिरे निविश्य गतवान्। अन्यस्मिन् दिने प्रातः काले ग्रन्थं दृष्टवान्। तस्मिन् ग्रन्थे **सत्यं-शिवं-सुन्दरम्** इति मधुरपदत्रयं लिखितमस्ति। अधोभागे शङ्करभगवतः हस्ताक्षरमस्ति।

काशीनगरे तस्य काव्यस्य प्रतिभां श्रुत्वा काशीपण्डिताः दूर्ष्यास्वभावाः तस्य काव्यस्य परिशीलनाय प्रसिद्धः मधुसूदनसरस्वत्याः समीपं प्रेषितवन्तः। मधुसूदनसरस्वती महोदयः तं काव्यं समग्रेण परिशील्य, बहुधा प्रसन्नः भूत्वा तस्याभिप्रायं प्रशंसाभावेन प्रकटितवान्।

तुलसीदासस्य, काव्यस्य च कीर्तिः उत्तरभारतदेशे सर्वत्र व्याप्तः। आग्रायां पादुषाचक्रवर्तिः अपि तुलसीदासभक्तम् अतीव श्लाघितवान्। काशीनगरपण्डिताः ईर्ष्याभावेन तस्य श्रीरामचरितमानसकाव्यस्य नाशनं कर्तुम् अनेकशः प्रयत्नं कृतवन्तः। किन्तु काव्यस्य पाण्डित्येन तुलसीदासस्य रामभक्तिपाटवेन च स ग्रन्थः अमृतत्वमापादितः। अनन्तरकाले श्रीरामचरितमानसकाव्यं वाल्मीकिरामायणमिव प्राचुर्यमप्राप्नोत्।



# 'सप्तगिरि' ग्राहकेभ्यः सूचनाः

**सप्तगिरि-मासपत्रिकायाः पाठकेभ्यः प्रतिमासं सकाले प्रापणार्थं नानाविधकार्यान् करोतीति अवगतः विषयः एव। अस्मिन्नेव क्रमे भक्तानां सङ्केतानां क्रमीकरणार्थं प्रयत्नं करोति। पाठकाः एनं विषयं दृष्टौ स्थाप्य अधोनिर्दिष्ट प्रकारेण प्रधानसम्पादकस्य कार्यालयं प्रति सम्पर्कं कुर्वन्तु।**

**१.सप्तगिरि मासपत्रिकायाः सम्बन्धिताः सूचनाः, आक्षेपान् च** sapthagiri.helpdesk@tirumala.org **द्वारा सूचयितुं शक्नुवन्ति।**

**२. सप्तगिरि ग्राहकाः सङ्केतस्य परिवर्तन-सम्बन्धी विवराणां कृते ०८७७-२२६४५४३ दूरवाणीं प्रति स्वीय सम्पूर्णं सङ्केतं, दूरभाषा संख्यया साकं कार्यालयस्य कार्यसमये (प्रातः १०.३० तः सायं ५.०० मध्ये) पुनः ज्ञापयन्तु।**

**३. उपर्युक्त दूरवाणी संख्या द्वारा अथवा** sapthagiri.helpdesk@tirumala.org **द्वारा वा सूचयन्तु।**

**४. अन्तर्जाल (आन्लैन्) ग्राहकाः स्वीय सम्पूर्णं सङ्केतं ति.ति.दे. अन्तर्जालपुटे ज्ञापयन्तु!**

# कूर्मवत् व्यवहर्तव्यम्

**भगवद्गीताग्रन्थः सर्वैः आचरणीययोग्यः वर्तते। भगवद्गीतायां स्थितेषु विषयेषु अल्पान् विषयानपि आचरेमश्चेत् बहुलाभः भवति। गीताचार्यः गीतायां तान् विषयान् बहु सरलरीत्या, सरलोपमानैः विवृतवान्। तद्वारा सर्वेऽपि तान् सुलभतया अवगन्तुं शक्नुवन्ति।**

मनुष्यः सुरक्षिततया भवितुमिच्छति चेत् कूर्मवत् व्यवहर्तव्यमिति भगवद्गीता बोधयति। कूर्मस्य व्यवहारः प्रत्येकरीत्या विद्यते। तस्य शरीरोपरि बहुदृढम् आवरणं वर्तते। यथा मनुष्यः स्वशिरोपरि शिरस्त्राणं धरति तथैव कूर्मस्य अपि स्व समस्तशरीरस्य कृते शिरस्त्राणं विद्यते। यदा आपत्कालः सम्भवति, तं ज्ञात्वा झटिति स्व अवयवान् सर्वान् तस्मिन् आवरणे स्वीकरोति। स्वीयान् सर्वेषु विपत्तिषु रक्षति च। भगवद्गीतायाम् अस्य उपमानं किमर्थं दत्तमिति ज्ञास्यामः।

मनुष्यस्य दश इन्द्रियाणि विद्यन्ते। तेषु पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि। कर्मेन्द्रियानुपयुज्य वयं कर्माचरणं कुर्मः। ज्ञानेन्द्रियाणां माध्यमेन वयं ज्ञानं सम्पादयामः। वाक्-पाणि-पाद-पायु-उपस्थ इति पञ्च कर्मेन्द्रियाणि; नेत्र-कर्ण-जिह्वा-नासिका-त्वक् च ज्ञानेन्द्रियाणि। एनानिन्द्रियानुपयुज्य मनुष्यः नानाविधान् भोगानास्वादयति। नेत्रे सुन्दरदृश्यदर्शनकामुके स्तः, कर्णौ सङ्गीतगानादि श्रवणकामुकौ। एवं समस्त इन्द्रियाणि नानाविधान् कामयन्ति। इन्द्रियान् तेषां कृते एव उपयोगं करणीयम्। भोगे पतिताः रोगभागिनः भवन्ति। लक्ष्यसाधने विफलो भवन्ति। लक्ष्यसाधनार्थं बुद्धिः तीक्ष्णं भवेत्। अत एव गीताचार्यः कूर्मस्य उदाहरणम् ज्ञापयन् -

**''यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता।।**
(भ.गी.२.५८)

यस्येन्द्रियाणि इन्द्रियार्थेभ्यः आकृष्टानि, यः तं कार्यं कूर्मोऽङ्गानीव करोति, सः स्थिरचैतन्ये स्थितो भवति। आपत्काले समीपे सति यथा कूर्मः स्वीयावयवान् अन्ते आकृषति तथैव प्रज्ञावान् उन्नतलक्ष्यं वीक्ष्य अल्पेन्द्रियभोगान् त्यजति। तस्य बुद्धिः सर्वदा स्थिरः एव भवति। अर्जुनः



**तेलुगु मूलम्- डा॥ वैष्णवाङ्घ्रि सेवकदासः**
**संस्कृतानुवादः - श्री मुरली**

बाल्यकाले तथैव करोति स्म। गुरोः कृते कमण्डलुमध्ये सर्वप्रथममेव जलमानीय अधिकान् पाठान् अभ्यसति स्म। एकदा रात्रौ भोजनसमये प्रकाशस्याभावेऽपि यथा हस्तः मुखपर्यन्तं गच्छति तथा रात्रिवेलायामपि बाणान् लक्ष्यसाधनं कर्तुं शक्यते इति ज्ञात्वा अन्धकारेऽपि बाणाभ्यासं करोति स्म। तस्य श्रद्धां वीक्ष्य द्रोणः - 'त्वां लौकैकधनुर्धरं' करोमि इति वचनं दत्तवान्। यः तपमाचरति तस्य कृते सर्वे निश्चयेन वरान् यच्छन्ति। तपसि मुख्यभागः इन्द्रियभोगत्यागः एव। लक्ष्यसाधनानन्तरं भूयमानफलान् मनसि जानन् विद्यार्थिनः, युवाः च तात्कालिकान् इन्द्रियभोगान् त्यजेयुः। बलवता यदि कोपि इन्द्रियभोगान् प्रापयितुं प्रयत्नं कुर्वन्ति चेत् कूर्म इव इन्द्रियान् अन्ते निग्रहणं कुर्वन्तु। इन्द्रियाणि यदा इन्द्रियार्थानामुपरि गच्छन्ति तदा बुद्धिः लक्ष्योपरि स्थिरः न भवति।

अतः इन्द्रियाणां निग्रहणपुरस्सरं तान् लक्ष्यसाधने उपयुज्यमानः एव भवामः। एकं कूर्मक्रीडनकं पठनस्थाने स्थाप्य तद्वारा स्फूर्तिं प्राप्नुमः। गीतायाम् उक्त प्रकारेण यदि आचरेम तर्हि निश्चयेन विजयसाधने अग्रे सरामः।

आयुर्वेदः

तेलुगु मूलम्- डा।।चिट्टिभोट्ल मधुसुनशर्मा
संस्कृतानुवादः - श्री ऐ.माधवशर्मा

# वातरोगहन्त्री अजमोदिका

अजमोदिका सर्वसाधारणतया लभ्यमाना, विविध पाकनिर्माणेषु उपयुज्यमाना वर्तते। संस्कृते अस्य नानाविध नामानि वर्तन्ते। यव सदृशत्वात् **यवानी** इति, अजैः प्रीतियुतत्वात् **अजमोदिका** इति, अग्निदीपनगुणत्वात् **अग्निवर्धनी** इति, **दीपनी** इति, तीव्रगन्धयुतत्वात् **तीव्रगन्धा** इति, वातरोगाणां निवारणत्वात् **वातारि** इति, शूलान् (पीडान्) न्यूनीकरोति इति कारणात् **शूलहन्त्री** इति एवं रूपेण बहुभिः नामभिः इयमाख्यायते। एनाम् अङ्गले Carum seeds, Ajwain seeds, Bishops seeds इति व्यवहरन्ति।

एपियेसि इत्युच्यमान वृक्षकुटुम्बस्य सम्बद्धायाः अस्याः शास्त्रीयं नाम Carum Capticum अजमोदिकामध्ये स्थितानाम् औषधगुणानां विषये इदानीं ज्ञास्यामः। अजमोदिकां चूर्णतया प्रयोगसन्दर्भेषु उष्णसंस्करणेन चूर्णीकृत्य उपयुञ्ज्यात्।

**निष्प्रक्रम निवारणाय**-५० ग्रा. अजमोदिकाचूर्णं १०० ग्रा. गुडचूर्णे सम्मेल्य स्थाप्य प्रातः, सायम् अर्धचमसप्रमाणेन स्वीकुर्यात्।

**बुभुक्षा भवनार्थं**-५० ग्रा. अजमोदिकाचूर्णं, ५०ग्रा. सैन्धव लवणचूर्णं सम्मेल्य प्रतिदिनं भोजनसमये प्रथमग्रासे १,२ ग्रा. मेलयित्वा सेवनेन जठराग्निवर्धनं भूत्वा बुभुक्षा भवति।

**अपानवायु समस्या कृते**-१०० ग्रा. अजमोदिकाचूर्णे २५ ग्रा. कृष्णलवणचूर्णं सम्मेल्य प्रतिदिनं द्विवारं भोजनानन्तरं २,३ ग्रा. चूर्णं १०० मि.ली. जले मिश्रीकृत्वा सेवयेत्।

**अजीर्णस्यकृते**-अजमोदिका, शुण्ठी, सैन्धवलवणं, कृष्णमरीचिका चूर्णान् एकैकं २५ ग्रा. परिमाणेन सम्मेल्य दिने द्विवारं भोजनानन्तरं १,२ ग्रा. चूर्णं ५० मि.ली. जले सम्मेल्य सेवनेन स्वीकृताहारः सम्यक्तया जीर्णीभूत्वा उदरसम्बन्धी व्याधयः न आयान्ति।

**मुखांसानां कृते**-प्रतिदिनम् एकवारम् अर्धचमसप्रमाणे अजमोदिकाचूर्णे एकचमसं दधिं सम्मेलनं कृत्वा मुखोपरि लेपनं कृत्वा एकघण्टानन्तरं किञ्चिदुष्णजले मुखप्रक्षालनं कुर्यात्। एवं करणेन कश्चन दिनेषु मुखांसानां निवारणं भवति।

**साधारण नस्यनिवृत्यै**-प्रतिदिनं द्विवारं एकस्यां दर्व्यां अजमोदिकान् गृहीत्वा उष्णं कुर्वन् आगम्यमानं धूमं जिघ्रेत्।

**उदरपीडया सह विरेचनानां कृते**- ५ग्रा. अजमोदिकां कृष्णवर्णपर्यन्तं संस्कृत्य (उष्णीकृत्वा) २००मि.ली. जले सम्मेल्य तं जलं १०० मि.ली अवशेषण पर्यन्तं घर्मं कृत्वा निष्कास्य, संशोध्य स्थापयेत्। तं जलं द्वि, त्रि भागेषु विभज्य द्वित्रिवारं स्वीकुर्यात्।

**आयासाय**-अजमोदिकाम् उष्णं कृत्वा वस्त्रे बद्ध्वा वक्षस्थलोपरि (छातेरुपरि) मर्दनं (कापटं) कुर्यात्। एवमेव २०० मि.ली. जले द्विचमसप्रमाणं वातारिं प्रक्षिप्य उष्णं कुर्वन् भाष्पं जिघ्रेत्।

**शयने मूत्रविसर्जनायाः कृते**-अजमोदिकाचूर्णं २० ग्रा. कृष्णतिलानां संस्कृतं (उष्णीकृतं) चूर्णं ५०ग्रा., गुडचूर्णं ७५ ग्रा. सम्मेल्य, स्थाप्य प्रातः सायं एकैकस्मिन् काले अर्धचमसपरिमाणं चूर्णं सेवयेत्।

पूर्वोक्त प्रकारेण औषधसेवनेन कारणैर्विना आगम्यमाना मूत्रविसर्जनसमस्या अपि न्यूनीभवति।

**गलपीडोपशान्त्यै** - प्रतिदिनं द्विवारं २०० मि.ली जले एक चमसं अजमोदिकान् क्षिप्त्वा किञ्चित् कालं स्थाप्य १०० मि.ली. अवशिषेत् तथा उष्णीकृत्वा, निष्कास्य, संशोध्य १ ग्रा. लवणं संयोज्य मुखक्षालनं कुर्यात्।

**कर्णपीडायै** - ३० मि.ली. दुग्धे २,३ ग्रा. अजमोदिकाचूर्णं मेलयित्वा, उष्णं कृत्वा, पुनः शीतं कृत्वा प्रदिदिनं २,३ वारं त्रि, चतुर् बिन्दून् कर्णे दद्यात्। एनमौषधं प्रतिदिनं निर्मातव्यम्।

Edited and Published on behalf of T.T.Devasthanams by Dr. K.Radharamana, M.A., M.Phil., Ph.D., Chief Editor, T.T.D., and Printed at T.T.D. Press by Sri. R.V. Vijay Kumar, B.A. B.Ed., Dy.E.O., (Publication & Press), T.T.D. Press, Tirupati - 517 507.



# तिरुमलतिरुपतिदेवस्थानम्

'सप्तगिरिः' आध्यात्मिकमासपत्रिका (तेलुगु, तमिलम्, हिन्दी, अङ्गलम्, कन्नड,संस्कृतम्)

गृहं गृहं सप्तगिरिः! श्रीस्वामिनः अक्षरलक्ष्मीः!



## कलियुगप्रत्यक्षदैवस्य श्रीवेङ्कटेशस्य दिव्यवैभवम्
## प्रतिमासम्... सप्तगिरिपत्रिकायां पश्यन्तु.. पठन्तु




भगवन्तं द्रष्टुं
देवदेवं प्राप्तुं नाना मार्गाः,
पद्धत्यःसन्ति।
आपन्निवारकं सप्तगिरीशं
केचन पुष्पैः अर्चन्ति
केचन अक्षरपुष्पैः पूजयन्ति




श्रीस्वामिनः अक्षरप्रसादरूपस्य सप्तगिरि पठनं
पाठनमपि तस्यसेवा एव।

प्रतिमासं.... सप्तगिरिं पठन्तु... आत्मीयैः पाठयन्तु!
प्रतिमासं श्रीस्वामिनं दर्शनं कुर्वन्तु... तिरुमलविशेषान् जानन्तु।

सप्तगिरि अभिवृद्धये आकाङ्क्षन्तु!
सप्तगिरि मासपत्रिकायाः ग्राहकाः भवन्तु



### ग्राहकत्व विवराणि

एकपत्रिका... - रू.५/-
वार्षिकग्राहकत्वम् - रू.६०/-
जीवनग्राहकत्वम् ... रू.५००/-
विदेशेभ्यः वार्षिकग्राहकत्वम्.. रू.८५०/-
सूचना - संस्कृतपत्रिकायाः जीवनग्राहकत्वं नास्ति।




'सप्तगिरि' मासपत्रिकायाः सम्बन्धित
अन्य पूर्ण विवराणां कृते
सम्पर्क कुर्वन्तु... ०८७७-२२६४५४३
प्रधानसम्पादकानां चरवाणी
९८६६३२११११५१


सङ्केतः
प्रधानसम्पादकः,
'सप्तगिरि' मासपत्रिका कार्यालयः,
ति.ति.दे. प्रेस् काम्पोण्ड्,
के.टि.रोड्, तिरुपतिः - ५१७ ५०७


सूचनागमम्, आक्षेपाणां च कृते सम्पर्कं कुर्वन्तु


sapthagiri_helpdesk@tirumala.org

